# श्रीभोगापुरेशाष्टकम्

श्रीमद्भोगापुरेशो भवतु भवगुरुर्भूतये मे दयालुः
ज्ञानं भक्तिं विरक्तिं प्रदित शमदमाद्यङ्गजातं सुखाय ।
स्तोतुं वाऽऽराधितुं त्वां न च मम सुमतिः कल्यदीनेन्द्रियेशैः
सन्मार्गाद्भ्रान्तितोऽयं पुरुगुण दयया पाहि भोगापुरेश ॥ १॥

मूढोऽहं ज्ञानहीनस्तव पदयुगले भक्तिहीनो दुरात्मा-
थापि त्वामेव जाने गुरुवर वचसा स्वामिनं नापरं वा ।
तस्मादस्मत्कृतागः क्षमय कुरु कृपां सत्त्वसिन्धो हनूमन्
दास्यं मे देहि नित्यं दशरथतनयप्रीत भोगापुरेश ॥ २॥

त्वद्भृत्पद्मान्तरङ्गे सकलगुणगणालङ्कृताङ्गो विदोषः
स्वामी वेदान्तवेद्यो मम मनसि तथा वर्ततां श्रीमनोज्ञः ।
श्रीमद्भोगापुरेशानिलतनय हितं मामकं वेत्सि सर्वं
किं मे विज्ञापनीयं सकलमपि सदा जानतः पूर्णशक्तेः ॥ ३॥

रक्षःपुत्रप्रणाशो जलनिधितरणं द्रोणगिर्याहृतिश्चे-
त्याद्यं दुःसाध्यकर्म त्वयि कृतवति मे संशयं याति चेतः ।
यद्यस्मन्मानसस्थप्रबलतरमहाकाममुख्यारिनाशो
भूयाच्छीघ्रं त्वयायं सकलमपि बलं वेद्मि ते सत्यमेव ॥ ४॥

सर्वात्मप्रेरकेशाद्भुतबलनिखिलप्राणिवृन्दप्रविष्टा-
नेकै रूपै रमेशं परिचरसि हरे वेत्ति कस्ते महत्त्वम् ।
वत्सानुक्रोशदृष्टिर्भवतु मयि चिरं संसृतिव्याधिरुग्णे
श्रीमद्भोगापुरेशाभयद विरतिविज्ञानभक्त्यादिपूर्ण ॥ ५॥


Webtopdfconverter.com

भग्ने बिम्बे कदाचित् पुनरपि गुरुसत्पाणिलब्धप्रतिष्ठः
सान्निध्यं व्यञ्जितुं यो निहितद्युतिमहादीपतप्तो व्यतानीत् ।
सर्वत्राद्धा पतङ्गान् मुहुरथ सुजनैः प्रार्थितः सञ्जहार
श्रीमद्भोगापुरेशं तमखिलफलदं सम्भजे पूर्वज्येष्ठम् ॥ ६॥

दुर्बुद्धिं दुर्विकारं हर हर हनुमन् पापजालं मदीयं
त्वत्सेवैकोपयुक्तां श्रियमपि दिश मे योग्यतां नातिलङ्घ्य ।
भूयो वृद्धिर्यथा स्यात्तव पदयुगलद्वन्द्वभक्तेरजस्रं
नर्ते त्वां मे गतिः स्यादिति धृतमनसा पालय स्वप्रपन्नम् ॥ ७॥

इष्टानिष्टाप्तिनाशप्रकटितनिजसद्भक्तिवर्गात्मशक्तिः
स्वस्वान्तध्यातसीतारमणसुचरणो मुक्तिविघ्नेभसिंहः ।
स्मृत्याशेषाघहर्ताभिलषितफलदः शेषरुद्रादिवन्द्यः
पायाद्भोगापुरेशश्चरणसुरशिरोरत्नमस्मान् सुदीनान् ॥ ८॥

श्रीमद्भोगापुरेशस्तुतिमिति कृतवान् भक्तिपूतान्तरात्मा
प्राणश्लोकाष्टकेन त्रिदशमुनिसमादिष्टमन्त्राङ्गजन्मा ।
यस्तां भक्त्या समेतः शुचिरिह पठते नित्यमस्याखिलेष्टं
दत्वानिष्टं च हन्ति प्रथितसुमहिमा प्राणिवृन्दप्रणेता ॥ ९॥

।। इति श्रीभोगापुरेशाष्टकम् ।।

www.onlinesanskritbooks.com


Webtopdfconverter.com